॥ यतिपञ्चकम् ॥

वेदान्तवाक्येषु सदा रमन्तो
  भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकवन्तः करणैकवन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ १॥

मूलं तरोः केवलमाश्रयन्तः
  पाणिद्वयं भोक्तुममत्रयन्तः ।
कन्थामिव श्रीमपि कुत्सयन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ २॥

देहादिभावं परिमार्जयन्त
  आत्मानमात्मन्यवलोकयन्तः ।
नान्तं न मध्यं न बहिः स्मरन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ३॥

स्वानन्दभावे परितुष्टिमन्तः
  संशान्तसर्वेन्द्रियदृष्टिमन्तः ।
अहर्निशं ब्रह्मणि ये रमन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ४॥

पञ्चाक्षरं पावनमुच्चरन्तः
  पतिं पशूनां हृदि भावयन्तः ।
भिक्षाशना दिक्षु परिभ्रमन्तः
  कौपीनवन्तः खलु भाग्यवन्तः ॥ ५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
यतिपञ्चक सम्पूर्णम् ॥